# ध्रुवावतारम्

## ( आधुनिकं लघुनाटकम् )



कमला-स्कंद-विरचितम्



पौष वदि प्रतिपदा ] नागपुरम् [ मूल्यम् चतुराणकाः

# समर्पणम्

जन्मतपस्विनां, त्यागाय संभृतार्थानां,
लोकाय सेवाव्रतधारिणां, श्वशुराणां

श्रीमतां

सदाशिव-जनार्दन-खोतमहाभागानां

कराम्बुजे

समर्पितमिदं

लघुनाटकं

**ध्रुवावतारम्**

# पुरस्कारः

आनन्दस्य परां कोटिं अनुभवामि अहं अस्य लघुनाटकस्य संस्कृतरसिकेषु पुरस्कारं कुर्वन्। संस्कृतवाण्याः सार्वजनीनः व्यवहारः नास्ति; सा च केवलं विदुषां शास्त्रिणां तत्त्वजिज्ञासूनां जीर्णकूर्चानां वा उपयोगिनी इति ग्रहः प्रायः दृश्यते आधुनिकेषु आंग्लशिक्षितेषु। कामं महाविद्यालयेषु विद्यापीठेषु वा कतिपये छात्राः एतां भाषां अधीयते, परं न तस्यां भाषणलेखनादि व्यवहारं कर्तुं पारयन्ति। बहुगुणलाभेन परीक्षासु उत्तमक्रमांकप्राप्तिः एव भवति तेषां उद्देश्यम्। जीवनस्य आर्थिकव्यवहारे संस्कृताध्ययनं नैव आवश्यकं मन्यन्ते बहवः। यद्यपि सांस्कृतिक-जीवने तस्य उपयुक्ततां स्वीकुर्वन्ति ते, तथापि प्रायः तस्य व्यवहारः तु तत्रापि प्रत्यक्षतया न प्रतीयते।

अस्माकं तु मते संस्कृतभाषा परिचयः सर्वेषां भारतीयानां अतीव आवश्यकम्। विशेषतः तु सुशिक्षिताः नागराः संस्कृतपरिचयं विना नैव सम्मानं अर्हन्ति। यतः सा हि भाषा विविधानां भारतीयभाषाणां पोषिका, भारतीय संस्कृतेः बोधिका, भारतीयविद्याकलादीनां च वाहिका आसीत्, अस्ति, भविष्यति च। तस्याः प्रसारस्य अनेके उपायाः सन्ति। तेषु "भिन्नरुचेः जनस्य बहुधा अपि एकं समाराधनं" नाट्यं उपयुक्ततमं मतम्। प्रत्यक्ष-श्रवणद्वारा एव भाषा अध्येतुं सुगमा। आधु-

निकेषु चित्रपटेषु गीतानि भिन्नभाषीयानि अपि सुकरतया कण्ठेषु ओष्ठेषु स्थानं लभन्ते। आंग्लभाषां अनधीत्य अपि तस्यां बहूनां भाषणानि श्रुत्वा एव बहवः तया परिचिताः भवन्ति। विशेषतः तु विद्यार्थिनां मध्ये यदि इमं भाषा व्यवहारपदं प्राप्नुयात् तर्हि सर्वेषामेव सुबोधा स्यात्।

अतः एव इमं आधुनिकं लघुनाटकं संस्कृते लिखित्वा बहु उपकृतं खलु लेखकवर्यैः मच्छिष्यमित्रैः। अस्य प्रयोगेण असंशयमेव संस्कृतप्रचारः सार्वजनिकः भवेत् इति अस्माकं मतम्। दृश्यं अत्र विद्यार्थिवर्गस्य, विषयः अपि तदनुकूलः, भाषा च शुद्धसंस्कृता अपि सर्वजनसुगमा। अभिनन्दनार्हाः खलु श्रीखोतमहोदयाः अस्य नाटकस्य लेखनप्रकाशनविषये।

न केवलं संस्कृतप्रेमिभिः अपि तु बालप्रेमिभिः च पुस्तकं इदं संग्राह्यं उत्तेजनीयः संस्कृतप्रसारः। इति विज्ञापयति।

पौष शु १५
शके १८७४

दि. वि. वराडपांडे
संस्कृतप्राध्यापकः
श्री. बिं. नगरमहाविद्यालयः नागपुरम्

# ध्रुवावतारम्



## प्रथमः प्रवेशः



(सूत्रधारः गायकः विदूषकश्च रंगदेवतां संपूज्य प्रार्थयन्ते )

**नान्दी**

**मगलमयध्रुवधीरवर । नमस्ते शिवंकर ।**
**बुद्धि शक्तिमृद्धि त्वम् । देहि भो प्रार्थयामहे ।। मंगलमय ०।।**

(गायकः निष्क्रामति)

**विदूषकः**—सूत्रधार । कोऽयं ध्रुवः यं वयं प्रार्थितवन्तः इति ज्ञातुमवश्यमिच्छा स्यात् सर्वेषामत्रभवतां समुपस्थितानां प्रेक्षावतां प्रेक्षकाणाम् ।

**सूत्रधारः**—विदूषक । किं नु न ज्ञायते स ध्रुवः येन बाल्ये वयस्येव राजराजेश्वरस्य स्वपितुः सदनं त्यक्त्वा भगवतः विष्णोः सेवा कृता ।

**विदूषकः**—आम्। स ध्रुवः येन विष्णुभक्त्या ध्रुव इति नामधेयकं स्थिरबन्धनं प्राप्तमन्तरिक्षान्तराले।

**सूत्रधारः**—नाम एव तव दर्शयति विदूषक, दूषणान्वेषणं ते स्वभाव इति।

**विदूषकः**—अद्यावधि असारेण सूत्रेण सारवतान् नटान् नाटकसंसारपटे पत्रपतंगमिव खेलयन् त्वमद्य ध्रुवदर्शनार्थं श्रीवामुन्नमध्य स्थितानेतान् जनान् तेनैव सूत्रेणासारेण ध्रुवं गमयितुमुत्सहसे यथा रॉकेटवायुयानेनात्मानं मंगलं गमयितुमुत्सहन्ते केचन रॉकेटधाराः।

**सूत्रधारः**—को नाम विदूषकेण सह विवदेत ज्ञात्वा विदूषणस्वभावं तम्।

**विदूषकः**—को नाम सूत्रधारस्य सूत्राधारेण नाटकस्य पारं गन्तुं शक्नुयात्।

**सूत्रधारः**— विना सूत्रधारेण नैव भवेत्कस्यापि नाटकस्यारंभः।

**विदूषकः**—आरम्भशूरत्वं नाम सूत्रधारस्य गुणः इति तु सर्वे जानन्त्येव। ज्ञात्वा च तत् सूत्रधारं लघुं गणयित्वा न तस्य नामापि स्वीक्रियते नाटकोपादानपात्रेषु मुख्येषु।

**सूत्रधारः**—आः मृषाभिमानिन् भण्ड। सूत्रधारं लघुं कृत्वा विदूषकं किं नटाग्रपदवीं दातुमीहसे।

**विदूषकः**--हंहो । नटेषु अग्रनटः विदूषक एव अत्र विलसति सर्वेषामानंदमकरंदमधुपायमानानां दर्शकानां मनोविनोदार्थम् ।

**सूत्रधारः**—विदूषकस्य विनोदप्रकारस्तु ज्ञायते एव सर्वैः

यथा–अंगं कुब्जं शब्दविरोधः ।
वदनं वक्रं बहलः जल्पः ।
वस्त्रं विकृतं भूरि खखखनम् ।
ज्ञातो दृष्ट्वा व्याकारमिमम् ।
विदूषकोऽयं दूषणपृक्तः ।
जानाति स्वं भूषणयुक्तः ॥

तस्मादेव विदूषकं दृष्ट्वा खक्खन्ति जनाः ।

**विदूषकः**—सूत्रधारं दृष्ट्वा तु स्तोत्रं गायन्ति जनाः यथा–

कोऽयं शिष्टः भूषणसूत्रावृतदेहः ।
नाटकपटनिर्मातुं कामयते सूत्रम् ।
दत्त्वा यः सूत्राग्रं हस्ते पात्राणाम् ।
गगने क्षेप्तुं सज्जः पत्रपतंगमिव ॥

**सूत्रधारः**—भवतु पात्राणां क्षेपः । का तत्र तव क्षतिः ।

**विदूषकः**—खक्खन्तु नाम जनाः । कस्तत्र तव खेदः ।

**सूत्रधारः**—भो मित्र । किमिदमालपनमावयोः । विस्मृतमेव यदद्य नागपुरस्थश्रीखोतलिखितस्य ध्रुवावतार इति नाटकस्य प्रयोगः कर्तव्य इति ।

**विदूषकः**—किमर्थमद्य ध्रुवो गगनादवतरति। जाने यत्–

भक्त्या विष्णोः पुण्यं प्राप्तम् ।
स्थानं निश्चलयुतं फलम् ।
कतिकालात् खल्वयं निश्चलः ।
उद्विग्नः सन् किम्ववतीर्णः ।
भूमौ पतितः किमु कथनाय ।
ध्रुवपदलाभं मा त्वं स्पृहय ॥

**सूत्रधारः**—यावत्संपूर्णत्वेन नाटकमिदं न पश्यसि तावत् न ज्ञास्यसि सत्यं कः खलु ध्रुवावतार इति। अस्तु। गच्छाव आवाम्। भवतु नाटकस्यारंभः।

(उभौ गच्छतः)

[ समाप्तः प्रथमः प्रवेशः ]

---

## द्वितीयः प्रवेशः

(विद्यार्थिविरामकक्षायां सप्ताष्टविद्यार्थिनः विष्टरभाजः वर्तन्ते। केचन हसन्ति केचन विवदन्ते केचन पुस्तकानि पठन्ति।)

**चाकचक्यः**—(गायति स्ववेशं शुभ्रं दर्शयन् उत्थाय च)

पश्यतु मे वस्त्रम् । सुष्ठु सुचारुधवलरजतप्रभम् ॥
रजकेन च मृष्टम् । तप्तलोहलोठनकृतवलिनाशम् ॥
पूर्णमुपहसच्चन्द्रम् । दृष्ट्वा तदुपरि कृष्णकलंकम् ॥

मित्र सुललित । शोभनं वस्त्रं सुचारुवेशः एव भूषणमस्माकम् ।

**सुललितः**——नाहं त्वामनुमोदे । वस्त्रं नाम बाह्योपचारः । किं तत्रभूषणमस्माकम् । वेशस्तु भूषणं वेशकारस्य येन कौशल्यं स्वस्य प्रकटीकृतं तन्निर्माणे ।

**चाकचक्यः**——तत्किं भूषणमस्माकं भवतां मतेन ।

**सुललितः**—भूषणं तु ललितवाङ्मयस्य वाचनं चलच्चित्रपटप्रेक्षणं च येन ज्ञायतेऽस्माभिर्भिन्नस्वभावलोकानां प्रवृत्तिराचारो विचारश्च । तेन च वयं जानीमः कथं वर्तितव्यं कथं न वर्तितव्यं किमनुसरामः किं नानुसरामः किं दोषोपहतं किं च गुणोपेतम् । वयस्य——

ललितवाङ्मये बोधाभृतमपि ।
सुवर्णचषके निहितं भवति ।
शास्त्रदुरूहकटाहक्षिप्तम् ।
कटंकटेन प्रज्वलितं यत् ।
भृष्टं भृष्टं भृष्टं दृष्टम् ।
काठिन्यादिकदोषयुतम् ।
ललितवाङ्मयं चित्रपटं तत् ।
ज्ञानानंदप्राप्तिसाधनम् ।
सुलभं सुकरं भज तत् ।
शोभनं भूषणं स्वम् ।

**सोमदत्तः**--यत्कथितं युवाभ्यामेतत्कालपर्यन्तं तत्सर्वमेव विचारविहीनत्वं विकारवशत्वं च दर्शयति युवयोः। वस्त्रं न भूषणं सत्यत्वेन। न च कदापि ललितवाङ्मयवाचनं चलच्चित्रपटदर्शनं वा भूषणं भवितुमर्हति। भूषणं तु नूनं चहापानमेव। तदेव वेदेषु सोमपानमिति प्रसिद्धम्।

**विदूषणः**--एवं तर्हि वेदानां भाषानुवादेन तव नामधेयं चहादत्त इति।

**सोमदत्तः**--अनुवादकौशल्यं नाम स्वतंत्रः विषयः। तं विषयमधिकृत्य यदा परिसंवादः स्यात् तदा तु भवेत् भवतोऽस्तित्वमभावात्मकम् यथा निर्मक्षिमित्यत्र मक्षिकाणामस्तित्वमभावात्मकम्। अभावेन भावः अविचारेण विचारः दूषणे भूषणमिति सर्वमेतत् विदूषणस्य दूषणाकृतिं समलंकरोति।

**विदूषणः**--अपि ज्ञायते किं तत्रभवतां भूषणाकृतिं समलंकरोति। वस्त्राढयता, चित्रपटाग्रता, चहापानरंजकता, कक्षायां च हिक्कनं खल्खनं च।

**चाकचक्यः**-- भूषणं भवत्वस्माकं यत्किमपि। हिक्कतु खक्खतु भवान् किं तर्हि भूषणं भवतां मतेन।

**सुललितः**—आः। कोऽयं खलु भूषणपंडितः। दूषणं नाम जगति किं वर्तते तत्पृच्छतु भवान् तम्। तद्विषये तस्य पारापारीणत्वं पारगत्वं शोभते यथा रासेन रासभः गर्दैन गर्दभः।

**सोमदत्तः**—श्रुण्वन्तु भवन्तः। सर्वोऽयं विवादः भवतां भूषणं दूषयति। सत्यतया भूषणं तदेव यन्मनसः शान्ति विधास्यति। सर्वैश्चहा पेयाऽऽदौ मनसः शान्त्यर्थम्।

**विदूषणः**—सोमदत्त, हंहो सुहृद् चहादत्त। हृदयमेव परमं भूषणम्।

**सोमदत्तः**—किं नु ज्ञायते कथं मे हृदि चहावासः। बलात् हठात् हृदयात् जठरे निष्कासितापि चहा कथं पुनश्च हृदयस्थाने प्रवेशं करोतीति तु वैचित्र्यमत्र। हृदये मे तिरोभूय स्थिरीभूता चहा। सूक्ष्मतरेण क्षकिरणयन्त्रेण कृतोऽपि दर्शनफटाटोपः व्यर्थीभवति हृदयस्थं चहावासं पर्य्यवलोकयितुम्। न चहा तत्र दृश्यते परं सा वर्तते परमब्रह्मवत्।

**सुललितः**—किं तर्हि ब्रह्मावासः ते हृदयम्।

**चाकचक्यः**—सत्यं सत्यं वास एव ब्रह्मभूषणम्।

**सोमदत्तः**—न ब्रह्मभूषणं परं वासस्तु नासिकाभूषणम्। हं हो। प्याट्। भण्ड। विदूषण। आगता चहा। चहापानं कृत्वा गम्यतेऽस्माभिरध्ययनार्थं कक्षायाम्।

(घण्टानादो भवति)

**विदूषणः**—आः घण्टानादोऽयम्। पठनसमयः सम्प्राप्तः। झटिति गम्यते नोचेत् लुंचेत् शिरोवर्तिशिरोरुहानस्माकं बोधकः।

(ससम्भ्रमेण सर्वे गच्छन्ति विना चहापानात्)

[ समाप्तः द्वितीयः प्रवेशः ]

# तृतीयः प्रवेशः

( पाठशालाकक्षायां दश द्वादश विद्यार्थिनः विष्टरभाजः बोधकस्यागमनार्थमुत्सुकाः वर्तन्ते । बोधकोऽपि सद्यः प्रविशति स्वस्थानं गृह्णाति । )

**बोधकः**--प्रल्हादस्य ध्रुवस्य च कथां जानीथैव सर्वे यूयमिति मन्ये। तत्रापि चाकचक्य। कथय त्वं कस्तत्र ध्रुव इति प्रसिद्धिं गतः ।

**चाकचक्यः**--ध्रुवस्तु स हिरण्यकशिपुसुतः बोधक-महाभाग। राजपुत्रयोग्यवस्त्राणि धारयित्वा तेषां चाकचक्येन चकितः विष्णुः आत्मीयः कृतस्तेन ।

**सुललितः**—असत्यमेतत् महाशय। इदं तु प्रल्हादस्य वर्णनं न तु ध्रुवस्य। ध्रुवस्तु पर्वतशिखरात् अधःप्रक्षेपणं, स्तम्भबन्धने कशाघातः, कटंकटेन प्रज्वलितांगारे सुखस्वापः एवं प्रकारकमद्भुतमामाश्चर्यावलिप्तं चलच्चित्रपटदर्शनहेतुकं रमणीयालोकं निर्ममे ।

**सोमदत्तः**—कथं विस्मृतं ध्रुवचरितमेतयोः। प्रल्हाद-चरितमेव ध्रुवचरितमिति वर्णितम्। ध्रुवस्तु वेदाध्ययने रतिं

कुर्वाणः वेदोक्तसोमपायी उत भाषोक्तचहापायी वेदविधिविशारदः विष्णोः परितोषं प्राप्य निश्चलावस्थां गतः ।

**विदूषणः**—बोधकभट्टारक । न ज्ञायते केनापि कस्तत्र ध्रुव इति । प्रल्हादगुणभाक् ध्रुवस्तु अधुना वैदिककालसमुत्पन्नः सोमपायी कश्चित् ऋषिजनः सम्भूतः । ध्रुवस्तु पाठशालायामस्यामुत कक्षायामस्यामस्माकं वर्तते । ध्रुवस्य दर्शनार्थं ग्रीवामुन्नमय्य परीक्षणं कर्तुं नैवावश्यकम् ।

**बोधकः**—किमयं चाकचक्यः सुललितस्सोमदत्तो वा ध्रुव इति भण्यते त्वया ।

**विदूषणः**—कदापि नैव । ध्रुवचरणनिःसृष्टरजःकणभ्रमिचञ्चलत्वमितमपि स्थिरत्वं निश्चलत्वं ध्रुवत्वं नास्ति वासवेशधारिणः चाकचक्यस्य, चलच्चित्रपटचञ्चलदृष्टिकारिणः सुललितस्य चहापानचषके वेदानां सारदर्शिनः सोमदत्तस्य वा ।

**बोधकः**—कस्तत्र ध्रुवोऽस्यां कक्षायाम् ।

**विदूषणः**—( पठनव्यग्रं सुधीरनामकमेकं विद्यार्थिनं प्रत्यंगुलिनिर्देशं कृत्वा ) अयं सुधीरः खलु ध्रुवः । ध्रुवस्य नवावतारः । यस्स्वाध्यायध्रुवलक्ष्ये सदादत्तचित्तोऽस्मिन्कालेऽपि चाकचक्ययुतवेशधारणं, चहापानं, चित्रपटप्रेक्षणमकृत्वा सर्वसमयं यापयत्यध्ययने एव । का तत्रावश्यकता ध्रुवस्यान्यस्य नामसंकीर्तनस्य । यदि वयं सुधीरमनुसरामः ध्रुवभाजो भवेम वयम् ।

**बोधकः**—सूक्तमेतत् । ध्रुवस्यायं नवावतारोऽनुकरणयोग्यः । ध्रुवगुणगानं कृत्वा विरमामः ।

( सर्वे उत्तिष्ठन्ति गायन्ति च )

ध्रुव हे त्वम् । गगने खलु भासि हि सुष्ठु परम् ।
अवतारम् । तव दर्शयसि त्वं विचरन्तम्
स्थानेऽस्मिन् । पठनव्यग्रं स्वाध्यायरतम्
सुशोभनम् । निश्चययुक्तं धीरवरम् ॥

**बोधकः**—अनुकुर्वन्तु भवन्तस्सर्वे ध्रुवचरितम् ।

॥ समाप्तं नाटकम् ॥